शितिऽपदी । सम् । पततु । अमित्राणाम् । अमूः । सिचः ।

मुह्यन्तु । अद्य । अमूः । सेनाः । अमित्राणाम् । निऽअर्बुदे ॥२०॥

शितिः श्वेतवर्णः पादे यस्याः सा शितिपदी गौः । सा परसेनामध्ये विसृज्यमाना अमित्राणां शत्रूणां शुचः शोचमाना अस्मदायुधैर्निपीडयमाना अमूः सेनाः सं पततु संगच्छतु । हे न्यर्बुदे एतत्संज्ञक सर्प अमित्राणाम् शत्रूणाम् अमूः दूरे दृश्यमानाः सेना अद्य इदानीं युद्धसमये मुह्यन्तु मूढा भवन्तु । स्वमायावशेन तासां मोहम् उत्पादयेत्यर्थः ॥

इति पञ्चमेनुवाके पञ्चमं सूक्तम् ॥

शितिपदी गौ हमारे आयुधोंसे पीड़ा पाकर इन शोक करती हुईं शत्रुसेनाओंमें कूद पड़े, हे न्यर्बुदि नामक सर्प ! दूर पर दीखती हुई शत्रुओंकी सेनाएँ मूढ़ होजावें अर्थात् आप अपनी मायासे उनको मोहमें डाल दीजिये ॥ २० ॥ (२९)

पञ्चम अनुवाकमें पञ्चम सूक्त समाप्त

"मूढा अमित्रा न्यर्बुदे" इति सूक्तस्य शत्रुजयकर्मणि विनियोग उक्तः ॥

"मूढा अमित्रा न्यर्बुदे" सूक्तका शत्रुजयकर्ममें विनियोग कह दिया है ।

तत्र प्रथमा ॥

## मूढा अमित्रा न्यर्बुदे जह्येषां वरंवरम् ।
## अनया जहि सेनया ॥ २१ ॥

मूढाः । अमित्राः । निऽअर्बुदे । जहि । एषाम् । वरम्ऽवरम् ।

अनया । जहि । सेनया ॥ २१ ॥

हे न्यर्बुदे एतत्संज्ञक देव त्वम् अमित्रान् शत्रून् मूढाः त्वदीयया मायया मूढान् संजातमोहान् कर्तव्याकर्तव्यविभागज्ञानशून्यान् कुरु। एषां शत्रूणां मध्ये वरंवरम् श्रेष्ठं श्रेष्ठं जहि मारय। तथा अनया अस्मदीयया सेनया तान् जहि। त्वत्प्रसादाद् अस्मदीयापि सेना जयं लभताम् इत्यर्थः ॥

हे न्यर्बुदे ! आप अपनी मायासे शत्रुओंको कर्तव्य अकर्तव्यके ज्ञानसे शून्य अत एव मूढ़ करिये और शत्रुओंमेंसे छट्टा छट्टाको छाँट छाँट कर मारिये तथा इस हमारी सेनासे उनका संहार करिये अर्थात् आपके प्रसादसे हमारी सेना भी विजय पावे २१

द्वितीया ॥

यश्च॑ क॒व॒ची यश्चा॑कव॒चो॒३॑ऽमित्रो॒ यश्चाज्म॑नि ।

ज्या॒पा॒शैः क॑वचपा॒शैरज्म॑ना॒भिह॑तः शयाम् ॥ २२ ॥

यः । च । क॒व॒ची । यः । च । अ॒क॒व॒चः । अ॒मित्रः । यः । च । अज्म॑नि ।

ज्या॒ऽपा॒शैः । क॒व॒च॒ऽपा॒शैः । अज्म॑ना । अ॒भिऽहतः । श॒या॒म् २२

यः शत्रुः कवची कवचवान् तनुत्रेणावृतशरीरः यश्च शत्रु अकवचः कवचरहितः अनावृतशरीरः यश्च अमित्रः शत्रुः अज्मनि अजति गच्छत्यनेनेति अज्म रथादि यानम् तत्र वर्तते स सर्वः शत्रुः ज्यापाशैः स्वस्वधनुर्गतैर्मौर्वीपाशैः कवचपाशैः वर्मबन्धनपाशैः अज्मना रथादिना तत्रत्यैः पाशैश्च अभिहितः बद्धः शयाम् शेताम्। ❀ "लोपस्त आत्मनेपदेषु" इति तलोपः ❀। अयम् अर्थः। यद्यत् स्वरक्षणाय धनुःकवचादिकम् आबध्यते तदेव तस्य गतिप्रतिबन्धकं भवत्विति ॥

जो शत्रु कवच पहर रहा हो, जो शत्रु कवच न पहर रहा हो,

नङ्गा हो जो शत्रु रथ आदि सवारीमें बैठा हुआ हो वे शत्रु अपने कवच बाँधनेके पाशोंसे, प्रत्यञ्चापाशोंसे और रथ आदि के पाशोंसे बाँध कर शयन कर जाँय। तात्पर्य यह है, कि— अपनी रक्षाके लिये जिस धनुष कवच आदिको बाँधे वही उसकी गतिको रोक देय ॥ २२ ॥

तृतीया ॥

ये वर्मिणो येऽवर्माणो अमित्रा ये च वर्मिणः ।
सर्वांस्ताँ अर्बुदे हतांछ्वानोऽदन्तु भूम्याम् ॥ २३ ॥

ये । वर्मिणः । ये । अवर्माणः । अमित्राः । ये । च । वर्मिणः ।

सर्वान् । तान् । अर्बुदे । हतान् । श्वानः । अदन्तु । भूम्याम् २३

उक्त एवार्थो विव्रियते । ये शत्रवो वर्मिणः वर्मणा शस्त्रवारक-कवचेन युक्ताः ये अवर्माणः वर्मरहिताः च [ अमित्राः ] शत्रवो वर्मिणः वर्म कवचव्यतिरिक्तं शस्त्रनिवारकम् तद्युक्ताः। तदाच्छन्ना इत्यर्थः। हे अर्बुदे तान् सर्वान् त्वया हतान् मारितान् भूम्याम् पृथिव्यां निपातितान् श्वानः श्वसृगालाद्याः श्वापदाः अदन्तु भक्षयन्तु॥

जो शत्रु शस्त्रोंको रोकने वाले कवचोंको पहर रहे हैं, जो कवचरहित हैं, और कवचके अतिरिक्त अस्त्रनिवारक और वस्तुओंको पहिर रहे हैं, हे अर्बुदे ! आपके द्वारा उन सबके मारे जाने पर उन मरे हुओंको भूमिमें कुत्ते गीदड़ आदि खा जावें २३

चतुर्थी ॥

ये रथिनो ये अरथा असादा ये च सादिनः ।
सर्वानदन्तु तान् हतान् गृध्राः श्येनाः पतत्रिणः २४

ये । रथिनः । ये । अरथाः । असादाः । ये । च । सादिनः ।

सर्वान् । अदन्तु । तान् । हृतान् । गृध्राः । श्येनाः । पतत्रिणः २४

ये शत्रवो रथिनः रथारूढाः ये च अरथाः रथरहिताः ये च असादाः अश्वादियानरहिताः पदातयः ये च सादिनः अश्वारूढाः हे अर्बुदे त्वत्प्रसादेन अस्माभिर्हतान् मारितान् तान् सर्वान् शत्रून् गृध्रादयः पक्षिणो रदन्तु विलिखन्तु । नखैर्मुखेन विलिख्य भक्षयन्त्वित्यर्थः । ❀ रद विलेखने इति धातुः ❀ ॥

जो शत्रु रथसवार हैं, जो रथहीन हैं, जो घोड़े आदि सवारी से रहित पैदल हैं और जो घुड़सवार हैं, हे अर्बुदे ! आपके प्रसादसे उन सब मारे हुए शत्रुओंको गीध आदि पक्षी चोंच और नाखूनोंसे कुरेदें ॥ २४ ॥

पञ्चमी ॥

सहस्रकुणपा शेतामामित्री सेना समरे वधानाम् ।
विविद्धा ककजाकृता ॥ २५ ॥

सहस्रऽकुणपा । शेताम् । आमित्री । सेना । सम्ऽअरे । वधानाम् । विऽविद्धा । ककजाऽकृता ॥ २५ ॥

आमित्री अमित्रसंबन्धिनी शात्रवी सेना अस्मदीयाम् सेनां प्राप्य वधानाम् हननसाधनानाम् आयुधानां समरे संगमने सति विविद्धा विविधशस्त्रपातेन हता सहस्रकुणपा असंख्यातशवयुक्ता सती ककजाकृता कुत्सितजनना विलोलजनना वा कृता भवतु ॥

शत्रुओंकी सेना हमारी सेनाके पास आकर आयुधोंका सम्मेलन होने पर बड़ी घायल हो सहस्रों ल्हाशोंसे पट जाय और कुत्सित जन्म वाली होजाय ॥ २५ ॥

षष्ठी ॥

मर्माविधं रोरुवतं सुपर्णैरदन्तु दुश्चितं मृदितं शयानम् ।

य इमां प्रतीचीमाहुतिममित्रो नो युयुत्सति ॥२६॥

मर्माविधम् । रोरुवतम् । सुऽपर्णैः । अदन्तु । दुःचितम् । मृदितम् । शयानम् ।

यः । इमाम् । प्रतीचीम् । आऽहुतिम् । अमित्रः । नः । युयुत्सति

सुपर्णैः शोभनपतनैः शरैः मर्माविधम् मर्मसु स्तनमूलादिस्थानेषु विध्यमानम् । ❀ व्यध ताडने इत्यस्मात् मर्मशब्दोपपदात् संपदादिलक्षणः कर्मणि क्विप् । "ग्रहिज्या०" इत्यादिना संप्रसारणम् । "नहिवृतिवृषिव्यधिरुचिसहितनिषु क्वौ" इति पूर्वपदस्य दीर्घः ❀ । मर्मव्यधनादेव रोरुवतम् अत्यर्थं क्रोशन्तं दुश्चितम् दुःखैः पूरितं मृदितम् चूर्णीकृतम् अत एव भूमौ शयानम् एवंभूतं शत्रुम् अदन्तु श्वसृगालादयो भक्षयन्तु । यः अमित्रः शत्रुः नः अस्माकं संबन्धिनीम् इमां पृषदाज्येन हूयमानाम् आहुतिं प्रतीचीम् प्रतिमुखम् अञ्चन्तीं प्रतिनिवृत्तगतिं कर्तुं युयुत्सति योद्धुम् इच्छति । तम् एवंभूतं भक्षयन्तु इति पूर्वत्र संबन्धः ॥

जो हमारा शत्रु हमारी पृषदाज्यहुतिको लौटा कर हमसे युद्ध करना चाहता है उसके मर्मस्थान बाणोंसे छिन्नभिन्न होजाँय, मर्मोंमें पीड़ा होनेसे वह रोने लगे, और वह दुःखोंमें पड़ कर पृथ्वी पर गिर पड़े इस दशामें कुत्ते गीदड़ आदि उसको खाने लगें

सप्तमी ॥

यां देवा अनुतिष्ठन्ति यस्या नास्ति विराधनम् ।
तयेन्द्रो हन्तु वृत्रहा वज्रेण त्रिषंधिना ॥ २७ ॥

याम् । देवाः । अनुऽतिष्ठन्ति । यस्याः । न । अस्ति । विऽराधनम् ।
तया । इन्द्रः । हन्तु । वृत्रऽहा । वज्रेण । त्रिऽसंधिना ॥ २७ ॥

यां पृषदाज्याहुतिं देवा अनुतिष्ठन्ति वज्रोत्पादनाय आचरन्ति। यस्या आहुतेर्विराधनम् विराद्धिर्मोघवीर्यता नास्ति। अप्रतिहता शक्तिर्विद्यत इत्यर्थः। तया आहुत्या उत्पादितेन त्रिसंधिना संधित्रयोपेतेन वज्रेण वृत्रहा वृत्रासुरं हतवान् इन्द्रः हन्तु असमदीयान् शत्रून् हिनस्तु। "सर्वांल्लोकान्त्समजयन् देवा आहुत्यानया" [१२] इत्यनया ऋचा पृषदाज्याहुतेर्वज्ररूपता प्रागेवोक्ता॥

पञ्चमेऽनुवाके षष्ठं सूक्तम्॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वरः॥ १॥

श्रीमद्राजाधिराजराजपरमेश्वरश्रीवीरहरिहरमहाराजसाम्राज्य-
धुरंधरेण सायणाचार्येण विरचिते अथर्वसंहिताभाष्ये
एकादशकाण्डः समाप्तः॥

देवता वज्रको उत्पन्न करनेके लिये जिस पृषदाज्याहुतिको करते हैं जो पृषदाज्याहुति कभी निष्फल नहीं होती है, उस आहुति के द्वारा प्रकट हुए वज्रसे वृत्रासुरके नाशक इन्द्र हमारे शत्रुओंको मारें॥ २७॥ (३०)

पञ्चम अनुवाकमें छठा सूक्त समाप्त (४९०)
पञ्चम अनुवाक समाप्त

इति श्रीअथर्ववेदसंहिताका एकादशकाण्ड ऋषिकुमार
पं० रामस्वरूपशर्मात्मज सनातनधर्मपताका
सम्पादक ऋ० कु० पं० रामचन्द्र
शर्मा कृत सायणभाष्यानुकूल
भाषानुवाद सहित

